# अथ पुलस्त्यस्मृतिः

## वर्णाश्रमधर्मवर्णनम्

कुरुक्षेत्रे महात्मानं पुलस्त्यमृषयोऽब्रुवन्
तांश्च धर्मान्प्रकारांश्च नो वद स्मार्तमागमम् १
एवं पृष्टः प्रत्युवाच सर्वांस्तान् पृच्छत ऋृषीन्
पंचधा वास्थितं धर्मं शृणुध्वं द्विजसत्तमाः २
वर्णधर्मः स्मृतस्त्वेक आश्रमाणामतः परम्
वर्णाश्रमस्तृतीयस्तु गुणनैमित्तिकस्तथा ३
वर्णमेकं समाश्रित्य योऽधिकारः प्रवर्तते
वर्णधर्मः स विज्ञयो यथोपनयनं त्रिषु ४
यस्त्वाश्रयं समाश्रित्य पदार्थः संविधीयते
उक्त आश्रमधर्मस्तु भिक्षापिण्डादिकं तथा ५
उभयस्य निमित्तेन यो विधिः सम्प्रवर्तते
नैमित्तिकः सविज्ञेयः प्रायश्चित्तविधिर्यथा ६
ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः
उक्त आश्रमधर्मस्तु राजधर्मस्तु पञ्चमः ७
वर्णधर्मश्चतुर्णां यः आश्रमाणां तथैव च
द्वयोः साधारणो धर्मो यश्चासौद्वयशेषभाक् ८
इज्याध्ययनदानानि यथाशास्त्रं सनातनम्
ब्रह्म क्षत्रिय वैश्यानां सामान्यो धर्म उच्यते ९
याजनाध्ययने राज्ञो भूतानाञ्चाभिरक्षणम्
पाशुपाल्यं कृषिश्चैव वैश्यस्याजीवनं स्मृतम् १०
शूद्रस्य द्विजशुश्रूषा द्विजानामनुपूर्वशः
शूद्रा च वृत्तिस्तत्सेवा कारुण्यं कर्म तथैव च ११
गुरौवासोऽग्निशुश्रूषा स्वाध्यायो व्रत धारणिं
त्रिकालस्नापिता भृत्यै गुरौ प्राणांतिकी स्थितिः १२
तदभावे गुरुसुते तथा सब्रह्मचारिणि

कामतो वा समानत्वं स्वधर्मो ब्रह्मचारिणः १३
समेखलो जटी दण्डी मुंडी गुरुगृहाश्रयः
अन्यथा ग्रहमेधित्वं गच्छेत्कामतो वाश्रमांतरम् १४
अग्निहोत्रोपचरणं जीवनञ्च स्वकर्मभिः
धर्मदानेषु काम्येषु सर्वत्र जनविक्रयाः १५
देवपित्र्यतिथिभ्यश्च भूतानामानुकम्पिता
श्रुतिस्मृत्युक्तसंस्कारो धर्मोऽयं गृहमेधिनः १६
जटित्वमग्निहोत्रित्वं भूशय्याजिनधारणम्
वनेवासः पयोमूलनीवारकणवृत्तिता १७
प्रतिग्रहनिवृत्तिश्च त्रिःस्नानं मौनधारणम्
देवतातिथिपूजा च धर्मोऽयं वनवासिनाम् १८
सर्वारंभपरित्यागो भैक्षान्नं वृक्षमूलता
निष्परिग्रहता द्रोहः समता सर्वजन्तुषु १९
प्रियाप्रियपरिष्वङ्गः सुखदुःखाविकारिता
स बाह्याभ्यन्तराशौचं नियमो व्रतकारिता २०
सर्वेन्द्रियसमाहारो धारणाध्याननित्यता
भावशुद्धिस्तथेत्येवं परिव्राड्धर्म उच्यते २१
अहिंसा सत्यवादश्च सत्यं शौचं दया क्षमा
वर्णिनां लिङ्गिनाञ्चैव सामान्यो धर्म उच्यते २२
स्वज्ञानं हृदि सर्वेषां धर्मोऽयं वर्णिलिङ्गिनाम्
उदृष्टार्थो द्विविधः प्रोक्तो दृष्टार्थश्च द्वितीयकः २३
उभयार्थस्तृतीयश्च न्यायमूलश्चतुर्थकः
उभयाव्यवहारश्च दंडधारणमेव च २४
तुल्यार्थानां विकल्पःस्यान्नयायमूलः प्रकीर्त्तितः
वेदे तु विदितो धर्मः स्मृतौ तादृश एव तु २५
अनुवाकः श्रुतिसूक्तं कार्यार्थमिति मानवाः
तदर्थश्च प्रयासोऽयं स च सेव्यः फलार्थिना २६
उक्तः पञ्च विधो धर्मः श्रेयोऽभ्युदयहेतुकः

पुरुषाणां यथायोगं स च सेव्यः फलार्थिना २७
सद्यस्तु प्रौढबालायामन्यथा वत्सराच्छुचिः
प्रदाता यां त्रिरात्रेण दत्तायां पद्मिणी भवेत् २८

इति पुलस्त्यप्रोक्तं धर्मशास्त्रं समाप्तम्

Reference:
"Pulastya Smriti," in Shastri, Rajguru Haridatt, ed., *The Smriti Sandarbha: Collection of Thirteen Dharmashastric Texts by Maharshis, Vol. IV*, Delhi: Nag Publishers, 1988, pp. 2134-2136.